## ॥ सूचीपत्रिका ॥


| विषयसङ्ख्या. | विषयाः. | आरम्भ-पुटसङ्ख्या. | समाप्ति-पुटसङ्ख्या |
|---|---|---|---|
| १. | विधित्रयनिरूणम् ... ... | १, | ७, |
| २, | श्रवणविधेः अपूर्वविधित्वादिविचारः ... | ७, | ३[illegible], |
| ३' | ब्रह्मलक्षणविचारः ... ... | ३९, | ४६, |
| ४, | ब्रह्मणः कारणत्वविचारः ... ... | ४८, | ६०, |
| ५, | मायायाः कारणत्वविचारः ... | ६०, | ६६, |
| ६, | जीवेश्वरस्वरूपनिरूपणम् ... ..? | ६६, | १०५' |
| ७, | जीवैकत्वानेकत्वविचारः ... ... | १०५, | ११५, |
| ८, | ब्रह्मणः कर्तृत्वप्रतिपादनम् ... | ११५. | ११८, |
| ९, | ब्रह्मणः सर्वज्ञत्वसमर्थनम् ... ... | ११९, | १२३, |
| १०, | वृत्त्युपयोगविचारः ... ... | १२४. | १२६, |
| ११, | वृत्तेर्विषयसम्बन्धनिरूपणम् ... | १२६, | १३०, |
| १२, | अभेदाभिव्यक्तिस्वरूपनिरूपणम् ... | १३१, | १३४, |
| १३, | आवरणाभिभवस्वरूपनिरूपणम् ... ... | १३५, | १५३, |
| १४, | साक्षिस्वरूपनिरूपणम् ... ... | १५३, | १६६, |
| १५, | साक्षिणोऽज्ञानानावृतत्वसमर्थनम् ... | १६७, | १६९. |
| १६. | साक्ष्यानन्दस्यानावृतत्वनिरूपणम् ... | १६९, | १७९, |
| १७, | अहङ्काराद्यनुसन्धानोपपादनम् ... | १७९, | १८५. |
| १८, | सकारणाध्यासनिरूपणम् ... | १८५, | २१४, |
| १९, | वृत्तिनिर्गमावश्यकत्वनिरूपणम् ... | २१४, | २२७, |
| | **द्वितीयपरिच्छेदे ।** | | |
| २०, | प्रत्यक्षेणाद्वैतश्रुतेरबाधनिरूपणम् ... ... | २२९. | २४२, |
| २१, | आगमस्य प्रत्यक्षाद्बलीयस्त्वस्य व्यवस्थितत्वनिरूपणम्, | २४२, | २६२, |
| २२, | उपजीव्यत्वेन प्रत्यक्षाबाध्यशङ्कानिरासः ... | २६२. | २६८, |
| २३. | प्रतिबिम्बसत्यत्वनिराकरणम् ... ... | २६८, | २८८, |
| २४, | स्वाप्नपदार्थाधिष्ठाननिरूपणम् ... | २८८, | २९८, |
| २५, | स्वाप्नपदार्थानुभवप्रकारनिरूपणम् ... | २९८, | ३०४, |

| विषयसङ्ख्या. | विषयाः. | आरम्भ-पुटसङ्ख्या. | समाप्ति-पुटसङ्ख्या |
|---|---|---|---|
| २६. | सृष्टिकल्पकनिरूपणम् ... ... | ३०९, | ३११, |
| २७, | मिथ्यार्थस्याप्यर्थक्रियाकारित्वकथनम् ... | ३१२, | ३१७, |
| २८, | मिथ्यात्वमिथ्यात्वेऽपि प्रपञ्चमिथ्यात्वोपपत्तिः | ३१७, | ३२१, |
| २९, | जीवानामुपाधिभेदादेव सुखादिव्यवस्थोपपत्तिः | ३२१, | ३२८, |
| ३०, | उपाधिभेदेऽपि सुखाद्यनुसन्धानाननुसन्धानव्यवस्थोपपादनम् | ३२८, | ३३९, |
| ३१, | जीवाणुत्वनिराकरणम् ... ... | ३३९, | ३४८, |
| | **तृतीयपरिच्छेदे ।** | | |
| ३२, | कर्मणां विविदिषासाधनत्वनिरूपणम् ... | ३४९, | ३५२, |
| ३३, | कर्मणां ब्रह्मज्ञानसाधनत्वनिरूपणम् ... | ३५२, | ३६६, |
| ३४, | शूद्रस्य ब्रह्मविद्यायामधिकाराभावनिरूपणम् | ३६७, | ३७१, |
| ३५, | सन्न्यासाश्रमस्य विद्योपयोगित्वनिरूपणम् | ३७२, | ३८२, |
| ३६, | अमुख्याधिकारिकृतवेदान्तविचारस्य जन्मान्तरीयज्ञानोपयोगित्वनिरूपणम् ... | ३८२, | ३८६, |
| ३७, | निर्गुणस्याप्युपासनोपपादनम् ... | ३८७, | ३९३, |
| ३८, | ब्रह्मसाक्षात्कारे करणनिरूपणम् ... | ३९३, | ३९८, |
| ३९, | ब्रह्मविषयकशाब्दज्ञानस्याप्यपरोक्षत्वोपपादनम् | ३९९, | ४०९, |
| ४०, | अज्ञाननिवर्तकनिरूपणम् ... ... | ४०९, | ४२५, |
| ४१, | ब्रह्माकारवृत्तिनाशकनिरूपणम् ... | ४२५, | ४३१, |
| | **तुरीयपरिच्छेदे ।** | | |
| ४२, | अविद्यालेशनिरूपणम् ... ... | ४३२, | ४३४, |
| ४३, | अविद्यानिवृत्तिस्वरूपनिरूपणम् ... | ४३४, | ४४४, |
| ४४, | ब्रह्मानन्दस्य प्राप्यत्वोपपादनम् ... | ४४४, | ४४७, |
| ४५, | मुक्तस्येश्वरभावापत्तिनिरूपणम् .... | ४४७, | ४७२, |


—* ॥ इति श्रीसिद्धान्तलेशसङ्ग्रहविषयसूचीपात्रिका ॥ *—

# अप्पय्यदीक्षितः ॥

अथ विचारयामः क्व कदा कियन्तं वा समयमयमध्यास्त जगतीमिति ॥ अयं किल तुण्डीरमण्डलान्तर्वर्तिन्यखिलभुवनतलललामायमानकाञ्चीपुरपरिसरपरिवर्तिन्य**डयप्पल**नाम्न्यग्रहारे समुदभवदिति सार्वजनीनम् । यदद्यापि तत्प्रान्तवासिनः कतिचन तद्वंश्या इति सङ्गिरन्ते ॥ अस्य हि पितामहः **आचार्यदीक्षित**नामा समभवदिति समवगम्यते ॥ तद्यथा तेनैव न्यायरक्षामणौ— "आसेतुबन्धतटमा च तुषारशैलादाचार्यदीक्षित इति प्रथिताभिधानम् । अद्वैतचित्सुखमहांबुधिमग्नभावमस्मत्पितामहमशेषगुरुं प्रपद्ये ॥" इति प्रतिपादितत्वात् ॥ तस्यैव "वक्षःस्थलाचार्यदीक्षित" इति नामान्तरमर्पाति वृद्धाः ॥ तत्र च प्रमाणयन्ति नाम कदाचित्समजानि सपरिवारमुपासीनवरदराजस्य श्रीविजयनगराधीश्वरस्य श्रीकृष्णराजमहीपतेरुपश्लोकनमनु कयाचन कल्पनया काममामोदितमानसेन तेनैव महीपतिना ग्राहितमिदमेनमिति प्रसृतया जनश्रुत्या सहैव चित्रमीमांसास्थसन्देहालङ्कारध्वन्युदाहरणपद्यम् । तद्यथा—"यथास्मत्कुलकूटस्थवक्षस्थलाचार्यविरचिते वरदराजवसन्तोत्सवे ॥ काञ्चित् काञ्चनगौराङ्गीं वीक्ष्य साक्षादिव श्रियम् । वरदः संशयापन्नो वक्षःस्थलमवेक्षते ॥" इति ॥ तेन च छन्दोगकुलतिलकेन भरद्वाजकुलजलधिकौस्तुभेनायाजिषताष्टौ क्रतवः, अभोजिषताष्टौ ग्रामाः, अखानिषताष्टौ तडाकाः अजनिषताष्टौ तनयाः अबन्धिषताष्टौ शिवालयाः अदीपिषताष्टौ दिशश्चेति सर्वमिदं तदन्ववायसम्भवेन श्रीनीलकण्ठदीक्षितेन स्वकृतौ प्रस्तावनायां प्रपञ्चितं नलचरितनाटके—तद्यथा । "पारिपार्श्वकः—आः स्मृतमस्य कुलकूटस्थाः साक्षात्कृतब्रह्माणः सर्वविद्यागुरवश्छन्दोगाः सोमपीथिनो द्वैतवादासहिष्णवो जगद्विदिता एव । असीष्वपि विशेषात्तत्रभवा**नाच्चान्दीक्षित** इति । सूत्रधारः — साधु स्मृतं साधु । तस्य कृष्णराजवन्दितचरणारविन्दस्य भरद्वाजकुलचूडामणेरष्टभिः क्रतुभिरष्टभिरायतनैरष्टशम्भोरष्टभिर्ग्रामैरष्टभिस्तडाकैरष्टभिश्च सर्वविद्याविशारदैस्तनयैरष्टापि दिशो यशोभिर्ज्वलिताः ॥" इति तस्य च द्वे जाये ययोः प्रथमा सजातीया ॥ द्वितीया च विजातीयवैष्णवकुलतिलकश्रीवैकुण्ठाचार्यवंश्यश्रीरङ्गराजाचार्यदुहिता " **तोतारम्बी** " नाम । तस्यामुदभवंश्चत्वारस्तनयाः । तेषु ज्यायान् मातामहप्रार्थनाप्रसन्नपितृदत्तरङ्गराजनामधेयो "**रङ्गराजाध्वरीति**" सुप्रसिद्धः ॥ स च सर्वविद्याविशारदोऽद्वैतविद्यामुकुरविवरणदर्पणाद्यनेकप्रबन्धकृत्सर्ववेदाश्च । तद्यथा तत्रैव नलचरिते "तस्य पञ्चमस्सूनुरद्वैतविद्यामुकुरविवरणदर्पणाद्यनेकप्रबन्धनिर्माता शीलितएव रङ्गराजाध्वरीति" ॥ तस्यैव सुतयोर्द्वयोरग्रमाद्यः कनीयांश्चास्याच्चान्दीक्षितइति ॥ अस्य च तातादेव सकलविद्यावाप्तिश्चेति स्पष्टमधिगम्यते ॥ तद्यथा तेनैव "विद्वद्गुरोर्विहितविश्वजिदध्वरस्य श्रीसर्वतोमुखमहाव्रतयाजिसूनोः । श्रीरङ्गराजमखिनः श्रितचन्द्रमौलिरस्त्य**प्पदीक्षित** इति प्रथितस्तनूजः ॥" इति । तथापरिमले तृतीयपादान्ते ॥ श्रीवैकुण्ठार्यवंशाम्बुधिहिमकिरणश्रीमदद्वैतविद्याचार्यश्रीरङ्गराजाद्वयविसृतयशोविश्वजिद्याजिसूनोः । ग्रन्थे वेदान्तकल्पद्रुवरपरिमले सर्वजिद्याजिनोऽस्मिन् पूर्णः पादोऽजनिष्ट भ्रमरहितहिते निर्विशेषप्रधानः ॥" इति । तथा तत्रैव प्रथमपादान्तेऽपि "कणभक्षपदक्षपक्षपरिष्करणक्षणतक्षणदक्षगिरम् । अतिकर्कशतर्कशतक्षुभितक्षपितक्षपणक्षणभङ्गवरम् ॥ कपिलोक्तिनिराकरणप्रवणं कृतपन्नगसूक्तिपरिष्करणम् । नयमौक्तिकभूषितभट्टमतं विमलाद्वयचित्सु

खमग्नाधियम् ॥ महतामपि मान्यतम विदुषां विनिवेश्य गुरुं हृदि वैश्वजितम् । नयसंहतिशालिनि कल्पतरौ विश्रुतश्चरणः प्रथमः प्रथितः ॥ श्रीमद्भरद्वाजकुलजलधिकौस्तुभे श्रीरङ्गराजाख्यमखितनयनिर्मिते । वेदान्तकल्पद्रुवरपरिमलेऽनघे पूर्णोऽजनिष्टाद्यचरणइह सत्प्रिये ॥" इति । न्यायरक्षामणौ च ॥ "यं ब्रह्म निश्चितधियः प्रवदन्ति साक्षात् तद्दर्शनादखिलदर्शनपारभाजः । तं सर्ववेदसमशेषबुधाधिराज श्रीरङ्गराजमखिनं गुरुमानतोऽस्मि ॥" इति शिवतत्वविवेकेऽपि ।" सर्वविद्यालतोपघ्नपारिजातमहीरुहान् । महागुरून्नमस्यामि सादरं सर्ववेदसः ॥" इति ॥ अस्मिन् सिद्धान्तलेशसङ्ग्रहेऽपि । "शुद्ध्यै सङ्कलयामि तातचरणव्याख्यावचःख्यापितान्" इति । एवमाद्यनेकप्रबन्धवचनैस्सर्वजिदादिमहिममण्डलीमण्डनस्य सकलतन्त्रपारदृश्वनः श्रीसर्वतोमुखमहाव्रतादिमहायागयाजिश्रीमदाचार्यदीक्षितपौत्रस्य श्रीरङ्गराजाध्वरीन्द्रतनयस्य तातादेव समुपात्तसकलकलाकलापविस्तारस्य श्रीमतोदीक्षितेन्द्रस्य नामाप्पदीक्षितइत्येव । तस्यैवान्ध्रकर्णाटादिदेशीयव्यवहारसङ्गतमयअय्यइति पदद्वयमादायाप्पय इति अप्पय्यदीक्षित इति च भूयान् व्यवहारः । अयञ्च श्रीविजयनगराधीश्वरस्य श्रीकृष्णराजसूनोश्चिन्नबोम्ममहीपतेस्तदग्रजस्य च **नरसिंहदेवा**परपर्यायश्रीनरसभूपालदेवस्य तत्सूनोर्**वेंकटपतिराय**स्य च समकालिक इति च सुविशदमवलोक्यते ॥ तथोक्तं समरपुङ्गवदीक्षितैर्यात्राप्रबन्धे ॥ "हेमाभिषेकसमये परितोनिषण्णसौवर्णसहतिमिषाच्चिनबोम्मभूपः । अप्पय्यदीक्षितमणेरनवद्यविद्याकल्पद्रुमस्य कुरुते कनकालवालम् ॥" इति । तथान्यैरपि वर्णितम् ॥ यथा— "कर्णश्रीचिन्नबोम्मक्षितिपतिरभितोलम्भयञ्शातकुम्भस्तोमं हेमाभिषेकप्रणयनसमये यस्य मूर्तिं प्रशस्याम् । रेजे श्रीरङ्गराजाध्वरिवरकलशांभोधिलब्धप्रसूतेर्विद्याकल्पद्रुमस्य स्वयमिव कलयन् जातरूपालवालम् ॥" इति ॥ यथा वा — "नानादेशनरेन्द्रमण्डलमहायत्नातिदूरीभवत्कादाचित्कपदारविन्दविनतेरप्पय्ययज्वप्रभोः । शैवोत्कर्षपरिष्कृतैरहरहस्सूक्तैस्सुधालालितैः फुल्लत्कर्णपुटस्य बोम्मनृपतेः पुण्यानि गण्यानि किम् ॥" इति- एभिश्चिन्नबोम्मभूपतिसमकालिकतोक्ता भवति । अस्य नरसदेवसमकालिकता च तस्यैव चित्रमीमांसायाम् परिणामप्रकरणे — "द्विर्भावः पुष्पकेतोर्विबुधविटपिनां पौनरुक्त्यं विकल्पश्चिन्तारत्नस्य वीप्सा तपनतनुभुवोवासवस्य द्विरुक्तिः । द्वैतं देवस्य दैत्याधिपमथनकलाकेलिकारस्य कुर्वन्नानन्दं कोविदानाम् जगति विजयते श्रीनृसिंहक्षितीन्द्रः ॥" इति । "नरसिंहधरानाथ के वयं तव वर्णने । अपि राजानमाक्रम्य यशो यस्य विजृम्भते ॥" इति च । तथा चोत्प्रेक्षाप्रकरणे— "नरसिंहमहीपाल विदुस्त्वां मकरध्वजम । मार्गणास्तव सञ्जाताः कथ सुमनसोऽन्यथा ॥" इत्यादिना तेनैव प्रतिपादिता । अस्य वेङ्कटपतिसमकालिकत्वञ्च विधिरसायने "अव्याप्तिः पौर्णमास्या" मिति तुरीयश्लोकान्तर्गत "निष्प्रत्यूहाग्निहोत्राहुतियुगलमिताधारसङ्कीर्तनेऽपि" इति तुरीयचरणव्याख्यावसरे "अयमत्र सङ्ग्रहश्लोकः— द्वे आहवनीये इति श्रुतोविधिर्ह्यग्निहोत्रमधिकृत्य । फलसम्बन्धविधान विनाऽस्य नान्यत् फल किञ्चित् ॥ इत्यस्मात् परम् "प्राप्तं तत् प्रापणीयं किल यदिह कियान् पूरणीयोऽस्ति नांशोनानिष्टं वा निवर्त्यं निजविषयतया दृश्यते किञ्चिदत्र । किन्तु व्यापारमेष प्रथयति फलसयोजनार्थं परेषां प्राप्तः पुण्यैरगण्यैरिव विबुधगणो वेङ्कटक्षोणिपालम् ॥" इत्युदाहृतेन पद्येन सिद्ध्यति । इमे च कृष्णराजनरसनृपचिन्नबोम्मवेङ्कटक्षोणिपालाः आङ्गलेतिहासलेखरीत्या तदब्दीयषोडशशतकपरार्धादारभ्य सप्तदशशतकपरार्धं यावदासन्नित्यध्यवसीयते । अस्य च परमायुर्द्वासप्ततिस्समाः । तथा तदनु-

जतनुजन्मजेन **श्रीनीलकण्ठ**दीक्षितेन निरूपितं शिवलीलार्णवे । तद्यथा—"कालेन शम्भुः किल तावताऽपि कलाश्चतुःषष्टिमिताः प्रणिन्ये । द्वासप्ततिं प्राप्य समाः प्रबन्धाञ्छतं व्यधादप्पयदीक्षितेन्द्रः ॥" इति । किञ्च तेनैव स्वानिर्याणावसरे चिदंबरे—"चिदंबरमिदं पुरं प्रथितमेव पुण्यस्थलं सुताश्च विनयोज्वलाः सुकृतयश्च काश्चित् कृताः । वयांसि मम सप्ततेरुपरि नैव भोगे स्पृहा न किञ्चिदहमर्थये शिवपदं दिदृक्षे परम् ॥ आभाति हाटकसभानटपादपद्मज्योतिर्मयो मनसि मे तरुणारुणोऽयम् ॥" इत्यभिधायार्धोक्त एव विरते "नूनं जरामरणघोरपिशाचकीर्णा संसारमोहरजनी विरतिं प्रयाता ॥" इति तदुत्तरार्धमापूरयाश्चक्रुरस्रपरिप्लुताक्षमस्य तनयाइति चायापि श्रूयते ॥

एवमतिसुविशदचरितस्याप्यस्य समयनिर्णये बहवोबहुधा पर्यक्रामन् । तद्यथा "अस्य सहभुवः श्रीमदाचान्दीक्षितस्य पौत्रः श्रीनीलकण्ठदीक्षितकविर्द्वादशहायनएवानेनानुगृहीतआत्मनोमुक्तये चिदम्बरपुरमाधितिष्ठतोऽस्य समक्षमेव तत्पर्युपासनावसरएव प्रथितवान्**नीलकण्ठविजय**चम्पूप्रबन्धम् । तदुपोद्घातस्थ "यस्संरम्भः कृतिविरचने दुष्कवीनामभैद्योयच्चैकान्त्यं तदुचितपदान्वेषणे चित्तवृत्तेः । लभ्यं तच्चेदपि कवयतामन्ततस्त्रीण्यहानि स्यादेवं किं सरसकविताराज्यदुर्भिक्षयोगः ॥" इति पद्येन प्रथमोऽय प्रबन्धस्तन्निर्मितेष्विति सूच्यते । किञ्च तदन्तर्गतेन "लीलालहिपुराणसूक्तिशकलावष्टम्भसम्भावनापर्यस्तश्रुतिसेतुभिः कतिपयैर्नीते कलौ सान्द्रताम् । श्रीकण्ठोऽवततार यस्य वपुषा कल्क्यात्मनेवाच्युतः श्रीमानप्पयदीक्षितस्स जयति श्रीकण्ठविद्यागुरुः ॥" इति श्लोकस्थजयतिपदवर्तमाननिर्देशेनास्य तादात्विकत्वमप्यधिगम्यते ॥ **स्वप्रबन्धरचनाकालश्च** "अष्टात्रिंशदुपस्कृतसप्तशताधिकचतुस्सहस्रेषु । कलिवर्षेषु गतेषु प्रथितः किल नीलकण्ठविजयोऽयम् ॥" इत्यनेन कल्यब्दाः ४७३८. इति प्रतिपादितः । सचेदस्य द्वासप्ततितमोवर्षः स्यादयं समुत्पन्नः इतः प्राक् ३३० वर्षेभ्यः कल्यब्दे ४६६६ शालिवाहनशके १४८६ आङ्गलाब्देच १५६४ इति **भट्टात्मारामजयन्तपण्डिताः । आंगलेतिहासलेखयो**स्तु "जननसमयोऽस्य तत्पूर्वं चतुश्चत्वारिंशतोऽब्दान् व्यवकलय्य कल्यब्दे ४६२२ शालिशके १४४२ आङ्गलाब्दे च १५२०" इति निश्चितम् । **ब्रह्मविद्यापत्रिकाकाराश्च**—"नीलकण्ठविजयश्च त्रिंशे वर्षे कविना प्राणायि । कविश्च द्वादशहायन एव सप्ततिवयसा दीक्षितेनानुगृहीतः । अतस्तेषामवतारकालः— कल्यब्दः ४६५० शाली० १४७१—आङ्गलाब्दः १५५० इत्युदाजहुः ॥ महामहोपाध्याय**मानवल्लिगङ्गाधरशास्त्रिणश्च** ब्रह्मविद्यापत्राधिपमेवान्वरुन्धन् ॥ सर्वमिदं वक्ष्यमाणप्रमाणरीत्या विमृश्यम् ॥

इदमिदमत्रानुसन्धेयम्—यत्किल कदाचिदयं स्वाभिमानिनं विजयनगराधीश्वरं श्रीकृष्णराजापराभिधं वेङ्कटक्षितिपतिमुपनिषेव्य विश्वजिद्यागविधित्साञ्च विशदय्य विजयनगराद्वाराणसीमनुप्राप्य तत्रैव पञ्चक्रोशयात्राविश्वेश्वरार्चनजाह्नवीनिषेवणादिनिरतः कमपि कालमुवास । तदानीमेवास्य मीमांसकेन पण्डितराजमीमांसागुरुणा **खण्डदेवेन** सह सङ्गतिस्तस्मै च विधिरसायनार्पणमित्यादि समजनि। ततश्च परं प्रणीते भाट्टकौस्तुभेऽपि तेनोक्तम्, "मीमांसकमूर्धन्येन विधिरसायनकृते"त्यादीत्यपि किंवदन्ती । तदानीमेवास्य भट्टश्री**शेषवीरेश्वर**सब्रह्मचारिणा श्री**शेषकृष्णदीक्षिता**न्तेवासिना सिद्धान्तकौमुदीमनोरमाशब्दकौस्तुभादिप्रणेत्रा **भट्टोजिना** सह समागमइत्यौत्तराहाः । दाक्षिणात्यास्तु सेतुयात्रायै दक्षिणां प्रस्थितेन तेन स्वस्थानएवास्य समागम इति वदन्ति । तत्र निर्णेतुमन्यतरद्यद्यपि नोपायस्तथाप्यप्पयदीक्षितो भट्टोजिदीक्षितमहासिकामन्वभवद्वाराणस्यामिति स्पष्टमग्रे । अस्मादेव ब्रह्मसूत्रमञ्जैष्ट सभाष्यं भट्टोजिः । अपि च मध्वतन्त्रमुखमर्दनमध्वमतविध्वंसनादि प्रबन्धजातम् । तच्च समधिगम्यते तत्त्वकौस्तुभे "तदुक्तमभियुक्तै"रिति तत्र तत्र मध्वतन्त्रमुखमर्दनश्लोकानामुदाहरणेन ।

अस्मिन्नेव समये स्थाविरमापन्नस्त्रैलिङ्गवेङ्गिनाडुकुलावतंसः पेरुभट्टात्मजः शेषकृष्णदीक्षितसुतश्रीशेषवीरेश्वरदीक्षितशिष्यः "**जगन्नाथपण्डितः** स्वगुरुजनकविरचित**प्रक्रियाप्रकाशा**ख्य**प्रक्रियाकौमुदी**व्याख्यानखण्डनच्छायापन्नां भट्टोजिनिर्मितां **प्रौढमनोरमा**मवलोक्य गुरुद्रुगयमित्यसूयन्नस्मै समास्त वाराणस्यामेव शान्तसकलविषयोपभोगेच्छ इति ॥

अत्रास्य कथा किञ्चिदिवानुसन्धेया ॥ अयं किल यौवने जयपुरपाठशालाध्यापकीभूय दिल्लीवल्लभेन **शाहजहां**प्रभुणा सादरं दिल्लीमनुप्रापितस्तत्रैव यौवनमनवशेषमतिवाहयाञ्चकार ॥ तदुक्तं तेनैव भामिनीविलासे "दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः" इति । आमफखानविलासप्रारम्भेऽपि यथा— "अथ सकललोकविस्तारविस्तारितमहोपकारपरम्परार्धानमानसेन प्रतिदिनमुद्यदनवद्यगद्यपद्याद्यनेकविद्याविद्योतितान्तःकरणैः कविभिरुपास्यमानेन कृतयुगीकृतकलिकालेन कुमतितृणजालसमाच्छादितवेदवनमार्गविलोकनाय समुद्दीपितसुतर्कदहनज्वालाजालेन मार्तिमतेव नव्वाबासफखानमनसः प्रसादेन द्विजकुलसेवाहेवाकिवाङ्मनःकायेन माधुरकुलसमुद्रेन्दुना रायमुकुन्देनादिष्टेन सार्वभौमश्रीशाहजहांप्रसादादधिगतपण्डितराजपदवीविराजितेन त्रैलिङ्गकुलावतंसेन पण्डितजगन्नाथेनासफखानविलासाख्येयमाख्यायिका निरमीयत ॥ सेयमनुग्रहेण सहृदयानामनुदिनमुल्लासिता भवता"दित्यादिना ॥ अथ तस्मिन् शाहजहांप्रभोरात्मजेनैव परिभूते विभवे ततः प्रस्थाय स्थाविरे वाराणसीं प्राप्त इति भामिनीविलासगतेन "सम्प्रत्यन्धकशासनस्य नगरे तत्त्वं परञ्चिन्त्यते ॥" इत्यादिना पद्येनाध्यवसीयते ॥ तदानीमेव पूर्वोदाहृतरीत्याऽसूयन्नाचार्यद्रुहे भट्टोजये **दीक्षितस्या**पि तदभिनन्दनमसृष्यन्नतिरुष्यन् प्रबध्य परिषदं विवदमानः कुतोऽप्यनेन सह भट्टोजिनाऽधिक्षिप्तः प्राप्तविमनिमा प्रायशोऽस्य तस्य च प्रबन्धानखण्डयदिति वस्तुस्थितिः ॥

यदाह **नागेशभट्टः** काव्यप्रकाशव्याख्याने — "दृप्यद्द्राविडदुर्ग्रहग्रहवशाम्लिष्टं गुरुद्रोहिणा यन्म्लेच्छेति वचोऽविचिन्त्य सदसि प्रौढेऽपि भट्टोजिना । तत्सत्यापितमेव धैर्यनिधिना यत्सव्यमृद्नात्कुचं निर्बध्यास्य मनोरमामवशयन्नप्प्ययाद्यान् स्थितान् ॥" इति ॥ स्वयमेव शब्दकौस्तुभशाणोत्तेजनेऽपि ॥ "अप्पय्यदुर्ग्रहविचेतितचेतनानामार्यद्रुहामयमहं शमयेऽवलेपान् ।" इति ॥ शशिसेनायाञ्च "अप्पय्यदीक्षितदवानलदग्धशेषं साहित्यमंकुरयते सरसैर्निबन्धैः ।" इति ॥ चित्रमीमांसाखण्डनारम्भेऽपि ॥ "सूक्ष्मं विभाव्य मयका समुदीरितानामप्पय्यदीक्षितकृताविह दूषणानाम् । निर्मत्सरो यदि समुद्धरणं विदध्यादस्याहमुज्वलमतेश्चरणौ वहामि ॥" इत्यादिना ॥ तथैव मनोरमाकुचमर्दनप्रक्रमेऽपि ॥ "लक्ष्मीकान्तपदाम्भोजमानम्य श्रेयसां पदम् । पण्डितेन्द्रो जगन्नाथः स्वति गर्व गुरुद्रुहाम् ॥ इह केचिन्निखिलविद्वन्मुकुटमयूखमालालालितचरणकमलानां शेषवंशावतंसानां श्रीकृष्णपण्डितानां चिरायार्चितयोः पादुकयोः प्रसादादासादितशब्दानुशासनास्तेषु च पारमेश्वरं पदं प्रयातेषु कलिकालवशवर्दीभवन्तस्तत्रभवद्भिरुल्लासितं प्रक्रियाप्रकाशमाशयानवबोधानिबन्धनैर्दूषणैः स्वयं निर्मितायां मनोरमायामाकुल्यकार्षुः । सा च प्रक्रियाप्रकाशकृतां पौत्रैरखिलशास्त्रमहार्णवमन्थाचलायमानमानसानामस्मद्गुरुपण्डितवीरेश्वराणां तनयैर्दूषिताऽपि स्वमतिपरीक्षार्थं पुनरस्माभिर्निरीक्ष्यते । तत्र तावत्सार्वधातुकमपिदिति सूत्रकौस्तुभे—इत्यादिना सङ्ग्यावद्भिरुपहसनीयमर्थं निरूपयतां तथाणुदित्सूत्रकौस्तुभे—इत्यर्थस्य निर्णयेन विलक्षणं स्वव्युत्पत्तिपाटवमुद्गिरता, भवतेर इति सूत्रगतमनोरमायां—शपः प्रवृत्तिं समर्थयमानानां गुरुद्वेषदूषितमतीनां यद्यपि पुरुषायुषेणापि

न शक्यन्ते गणयितुं प्रमादास्तथापि दिङ्मात्रेण कानपि कुशाग्रीयधिषणेषु निरूपयाम'' इति ॥ एभिरस्य भट्टोजीदीक्षितेन्द्रयोर्विरोधिता सम्मुखागतिश्च स्पष्टमवगम्यते ॥ परमपि तस्मिन्नेव समये कदाचन जाह्नवीरोधसि प्रियशिष्यैस्सह समतीतास्तास्ताः कथाः कुर्वन् शयानस्य च दीक्षितवर्यैर्दृष्टो दयानिधिभिस्तैः "किं निश्शङ्कं शेषे शेषे वयसि त्वमागते मृत्यौ । अथवा सुखं शयीथा निकटे जागर्ति जाह्नवी भवतः ॥" इति बोधितस्तामेव परमोपदेशगिरं गृह्णन् जाह्नवीं प्रसाद्य प्राप जागदीश्वरं पदमिति मध्यगार्ष्ट्रीयाः ॥ इत्थमनुगृह्यापकर्तारमपि जगन्नाथमव्याजकरुणानिधिरयमप्पयदीक्षितः विजित्य च ततस्ततस्समागतान् सार्वभौमप्रमुखान् पण्डितान् प्राप्तविजयनगरस्तत्रत्येन वेङ्कटपातभूपतिना बहुमतः प्रस्थायाधिविरिञ्चिपुरमाधाय विश्वजिद्यागमात्मजैरेकादशभिरनुजतनुजन्मजेन नीलकण्ठमखिना च प्राप्तचिदम्बरः प्रापदैश्वरं पदमिति वृद्धाः ॥ सर्वमिदं वर्षगतं वृत्तमित्यपि स्पष्टमवगम्यते ॥ तदुक्तं बालकविना— "यष्टुं विश्वजिता यता परिधरं सर्वे बुधा निर्जिता भट्टोजिप्रमुखास्स पण्डितजगन्नाथोऽपि निस्तारितः । पूर्वेऽर्धे चरमे द्विसप्ततितमस्याब्दस्य सद्विश्वजिद्यार्जी यश्च चिदम्बरे स्वमभजज्ज्योतिः सतां पश्यताम् ॥" इति ॥ किञ्चास्यायं बालकविस्समकालिक इति नीलकण्ठदीक्षितानूदिततदीयसूक्त्यैव विशदीभवति ॥ तद्यथा नलचरिते—"तथा वेदान्तकल्पतरुव्याख्यानं परिमलग्रन्थं रचयन्नस्तूयत बालकविना— "अप्पदीक्षित किमित्यतिस्तुतिं वर्णयामि भवतो वदान्यताम् । सोऽपि कल्पतरुरर्थलिप्सया त्वद्गिरामवसरं प्रतीक्षते ॥" इति" इति ॥

एवमेभिरन्यैश्च जगन्नाथपण्डितराजेन समागमः श्रीमदप्पय्यदीक्षितेन्द्रस्य द्वासप्ततितमाब्दपूर्वार्धे, यच्चौरङ्गजीवेन शाहजहांप्रभौ कारागारं प्रवेशिते तदसहमानेन वाराणसीं प्रविश्य तत्रत्यैरनाचार इत्यनादृतेन प्राणान्विमुमुक्षता चेति च ज्ञायते । ततश्चायं समयः आङ्गलाब्दरीत्या १६५८ भवति ॥ यच्चेद्दीक्षितानां द्वासप्ततितमः ते १५८७ वत्सरे संजाताः १६६०, वत्सरे प्रापुरैश्वरं पदमिति निर्विवादम् ॥

एतत्प्रणीताः प्रबन्धाश्च परश्शतं वर्तन्त इति "चतुरधिकशतप्रबन्धनिर्वाहकाचार्य"-त्यादितदीयबिरुदावलीभिर्विशदीभवति ॥ परन्तु साकीं पञ्चाशतः प्रबन्धानामभिधानविषयाद्युपलभ्यते । अन्येषां तु नामापि न श्रूयते । तत्र च दृष्टश्रुतानां प्रबन्धानामियमियं पट्टिका । तत्र प्रथममलङ्कारशास्त्रे— (१) **कुवलयानन्दः**— चन्द्रालोकस्य विपुला व्याख्या । (२) **चित्रमीमांसा**— इयमर्थचित्रविचारपरा सविस्तरमुत्प्रेक्षाप्रकरणान्तैव कविना निर्मिता । तदुक्तं तेनैव तदन्ते । यथा— "अप्यर्धचित्रमीमांसा न मुदे कस्य मांसला । अनूरुरिव तीक्ष्णांशोरर्धेन्दुरिव धूर्जटेः ॥" इति । (३) **वृत्तिवार्तिकम्**— इदमपि अभिधालक्षणयोर्द्वयोरेव वृत्त्योर्विचारपरम् । इदमप्यसमग्रमेव । तत्र प्रतिज्ञातव्यञ्जनावृत्तेरनिरूपितत्वात् । (४) **नामसंग्रहमाला** अभिधानकोशप्रायः कविसमयानुरोधेन स्नेहानुरागादिपरस्परपर्यायाभासपदार्थभेदविवरणपरः प्रबन्धः (५) तद्व्याख्या च नानाविधकविप्रयोगोदाहरणपूर्वमनतिविस्तरसङ्ग्रहा । इमे उभे नाममात्रविश्रुते । व्याकरणे— (६) **नक्षत्रवादावली**— क्रोडपत्रात्मिका सप्तविंशतिविप्रतिपत्तिविषयविचारपरा स्वतन्त्रा । (७) **प्राकृतचन्द्रिका**—प्राकृतशब्दानुशासनरूपा सवृत्तिस्सोदाहरणा लघ्वी कृतिः । (तर्के चैतत्कृताः प्रबन्धा न श्रुतदृष्टाः) ॥ मीमांसायाम्— (८) **चित्रपुटः** अज्ञातविषयस्मु-

दुर्लभश्च । (९) **विधिरसायनम्**— विधित्रयविचारपरः पद्यरूपः स्वतन्त्रस्सुप्रसिद्धश्च प्रबन्धः । (१०) **सुखोपयोजनी**— विधिरसायनव्याख्या विभागत्रयवर्ती सुप्रसिद्धा सुविस्तृता च ॥ (११) **उपक्रमपराक्रमः**— उपक्रमप्राबल्यसमर्थनपरः सर्वतः प्रसिद्धः प्रथीयान् प्रबन्धः । पूर्वोत्तरमीमांसयोः (१२) **नक्षत्रवादावली**— क्रोडपत्रिका पूर्वोत्तरतन्त्रयोस्सप्तविंशतिस्थलेषु विप्रतिपत्ति प्रदर्श्य विचारपरा व्याकरणनक्षत्रवादावलीतस्त्रिगुणा विरलसमधिगतिश्च स्वतन्त्रा ॥ वेदान्ते— (१३) **परिमलः**— भामतीव्याख्यानकल्पतरुगूढार्थविशदनपटुस्समग्रचतुरध्यायीविवरणः प्रथीयान् सुप्रसिद्धः प्रबन्धः । (१४) **न्यायरक्षामणी**— ब्रह्मसूत्रगतसर्वार्थसङ्ग्रहपरः स्वतन्त्रः । परं तु प्रथमाध्यायमात्रममुष्य प्रसिद्धम् । शेषस्तु ग्रन्थो नालेखीत्येव वृद्धाः ॥ (१५) **सिद्धान्तलेशसङ्ग्रहः**— उच्चावचाद्वैतिसिद्धान्तजालसङ्ग्रहरूपः स्वतन्त्रस्सुविस्तृतश्च प्रबन्धः ॥ (१६) **मतसारार्थसङ्ग्रहः**— शङ्करश्रीकण्ठरामानुजानन्दतीर्थानामाशयविवरणपरः सुसंगृहीतः श्रीकमततिरूपः प्रबन्धः मध्यराष्ट्रे प्रसिद्धः ॥ शङ्करमते— (१७) **नयमञ्जरी**— अद्वैतविचारविषयैव नाममात्रप्रकाशा । मध्वमते । (१८) **न्यायमुक्तावली**— आनन्दतीर्थसिद्धान्तप्रथनिका सुप्रसिद्धा । (१९) तद्व्याख्या— नातिसङ्ग्रहविस्तरा सुलभा सहमूलेन मध्यराष्ट्रे रामानुजमते. (२०) **नयमयूखमालिका**— विरलप्रचारा । श्रीकण्ठमते (२१) **शिवार्कमणिदीपिका**— श्रीकण्ठभाष्यव्याख्या सुविस्तृता सुलभा च (२२) **मणिमालिका**— शैवविशिष्टाद्वैतिहरदत्तशिवलिङ्गभूपालादिमार्गानुसारिणी गद्यपद्यमयी कर्णामृतमयी कृतिः ॥ (२३) **रत्नत्रयपरीक्षा**— हरिहरशक्तीनामुपामनातरतमभावबोधिनी सुलभा । (२४) **शिखरिणीमाला**—शिखरिणीवृत्तप्रायभागद्वयवर्ती श्रुतिपुराणार्थविचारपरा शिवोत्कर्षसाधनी चतुष्षष्टिपद्यरूपा कृतिः । (२५) **शिवतत्त्वविवेकः**— शिखरिणीमालाव्याख्या मूलार्थविवरणपरानेकश्रुतिपुराणवचनार्थविचाररूपः प्रथितः प्रबन्धः । (२६) **ब्रह्मतर्कस्तवः**— पुराणेतिहासगतशिवापकर्षकवचनाभासानां शिवपारम्ये तात्पर्यसमर्थकोवमन्ततिलकप्रायवृत्तगुम्फित सविवृतिस्सुप्रसिद्धश्च प्रबन्धः । (२७) **शिवकर्णामृतम्**— नारायणोत्कर्षपरश्रुत्युदाहरणपूर्वकशिवोत्कर्षस्थापकवचनमयं संगृहीत सुप्रसिद्धश्च । (२८) **रामायणतात्पर्यसङ्ग्रहः**— रामायणवचनरीत्या च परशिवोत्कर्षव्यवस्थापकं गद्यपद्यमयमतिलघु प्रबन्धरत्नम् । (२९) **भारततात्पर्यसङ्ग्रहः**— भारतरीत्या शिवोत्कर्षस्थापकोऽयम् । शेषं प्राग्वत् । (३०) **शिवाद्वैतविनिर्णयः**— शिवाद्वैतस्थापनपरः स्वतन्त्रस्तत्त्वरूपः । (३१) **शिवार्चनाचन्द्रिका**— शिवपूजाविचारपरा नातिविरलप्रचारा । (३२) **बालचन्द्रिका**— शिवार्चनाचन्द्रिकाव्याख्या नातिविस्तरा विरला । (३३) **शिवध्यानपद्धतिः**— शिवध्यानविषयपुराणसिद्धसिद्धान्तप्रदर्शिनी सुप्रसिद्धा । (३४) **तद्व्याख्या**— विरलप्रचारा । (३५) **आदित्यस्तवरत्नम्**— सूर्यस्तवव्याजेन तदन्तर्यामिणः शिवस्य स्तुतिः । (३६) तद्विवरणम्— आदित्यस्तवस्यैव व्याख्यानं सुप्रसिद्धम् । (३७) **मध्वतन्त्रमुखमर्दनम्**— आनन्दतीर्थमतखण्डनं पद्यमयं सुप्रसिद्धम् । (३८) **मध्वमतविध्वंसनम्**— तस्यैव विस्तृता विवृतिः समूलमेव सर्वतस्सञ्चरा । एवमन्यानि च पञ्चरत्नस्तव - तद्विवरण - शिवानन्दलहरी - दुर्गाचन्द्रकलास्तुति - तद्व्याख्या - कृष्णध्यानपद्धति - तद्व्याख्या - वरदराजस्तव- तद्व्याख्या - यादवाभ्युदयव्याख्या - ऽऽत्मार्पण - प्रभृतीनि खण्डखण्डानि प्रबन्धरत्नानि च सन्ति श्रोत्रयोर्नेत्रयोश्च पथमधिरूढानि ॥ कुचिदासां कृतीनां प्रायशः परिगणनमपि तैरेव दीक्षितचरणैः कृतम् ॥

तद्यथा— "श्रीवीरवेङ्कटपतिक्षोणिपालस्य साह्यतः । कृतः कुवलयानन्दश्चित्रमीमांसया सह ॥ अभिधालक्षणावृत्तिवृत्तिर्वृत्तिवार्तिकम् । यादवाभ्युदयाख्यायाव्याख्यानञ्च कृतं कृतेः ॥ नामसङ्ग्रहमाला च व्याख्या तस्याश्च विस्तृता । काञ्चीवरदराजस्य दिव्यविग्रहवर्णनम् ॥ व्याख्या तस्य च संक्लृप्ता नातिसङ्क्षेपविस्तरा । सर्वपापप्रशमनी श्रीकृष्णध्यानपद्धतिः ॥ सर्वदुर्गातितरणी दुर्गाचन्द्रकलास्तुतिः । आदित्यस्तोत्ररत्नञ्च तद्व्याख्यानञ्च विस्तृतम् ॥ नानापद्यात्मकचतुर्मतसारार्थसङ्ग्रहः । न्यायमुक्तावली तद्वन्मध्वाचार्यमतानुगा ॥ मयूखमालिका हृद्या लक्ष्मणाचार्यवर्त्मना । श्रीकण्ठाचार्यपद्धत्या निर्मिता मणिमालिका ॥ शङ्कराचार्यदृष्ट्या च प्रक्लृप्ता नयमञ्जरी । न्यायमुक्तावलीव्याख्या नातिविस्तरसङ्ग्रहा ॥ अद्वैतशास्त्रसिद्धान्तलेशसङ्ग्रहनामकः । न्यायरक्षामणिस्सर्वसूत्रतात्पर्यदर्पकः । तथा परिमलः कल्पतरुगूढार्थभेदनः । श्रीकण्ठभाष्यव्याख्या च शिवार्कमणिदीपिका ॥ श्रीशिवानन्दलहरी शिवाद्वैतविनिर्णयः । रत्नत्रयपरीक्षा च पञ्चरत्नस्तवस्तथा ॥ तथा शिखरिणीमाला ब्रह्मतर्कस्तवादयः । शिवतत्त्वविवेकश्च शिवकर्णामृतन्तथा ॥ शिवार्चनप्रकाशार्थचन्द्रिका बालचन्द्रिका । मीमांसायाश्चित्रपुटस्तथा विधिरसायनम् ॥ मीमांसा न्यायनिर्गूढउपक्रमपराक्रमः । एते चान्ये च बहवः प्रबन्धाः प्राग्विनिर्मिताः ॥" इति । परं मध्वतन्त्रमुखमर्दनमध्वमतविध्वंसनादय इति यावत् ॥ अनया परिगणनयैव तत्कृतिकरणपौर्वापर्यमपि सूचितमिति बोध्यम् ॥ सत्यप्यस्य सकलतन्त्रनैपुणे विशेषतोऽस्य वैदुषी पूर्वोत्तरमीमांसयोरित्यतोऽप्यर्वाचीनानां सर्वज्ञकल्पानां पण्डितशिरोमणीनां वचसैव ज्ञायते ॥ तद्यथा ॥ अद्वैततत्त्वरत्न - सङ्क्षेपशारीरकव्याख्या - वेदान्तकल्पलतिका - सिद्धान्तबिन्द्वाद्यनेकप्रबन्धकर्त्रा परमहंस**मधुसूदनानन्दसरस्वत्या**प्यद्वैतसिद्धौ— " सर्वतन्त्रस्वतन्त्रैर्भामतीकारकल्पतरुकारपरिमलकारै"रित्यादिना चन्द्रिकाद्यनेकप्रौढप्रबन्धप्रबन्धा गौड**ब्रह्मानन्देना**पि स्वकृतौ बिन्दुब्रह्मानन्दीये— " श्रीशङ्कराचार्यनवावतारं विश्वेश्वरं विश्वगुरुं प्रणम्य । वेदान्तशास्त्रश्रवणालसानां बोधाय कुर्वे कमपि प्रयत्नम्" ॥ इति श्लोकस्थवेदान्तशास्त्रपदस्य व्याख्यानावसरे " वेदान्तशास्त्रस्य श्रीबादरायणचतुर्लक्षणीरूपसूत्रनिचयभगवत्पादीयतद्भाष्यतट्टीकावाचस्पत्यतट्टीकाकल्पतरुतट्टीकापरिमलरूपग्रन्थपञ्चकमर्थ इति विवृण्वता स्पष्टीकृतम् ॥

किञ्चामुमुदाहरन्ति भगवतो भवानीपतेरंशावतीर्णं कमपि शाम्भवगणपारिषदम् "तद्यथा शिवरहस्ये नवमांशे—"दीक्षितोऽपि भवेत्कश्चिच्छैवश्छन्दोगवंशजः । भासुराचारनिरतः शिवभक्ताग्रणीः सुधीः ॥ शैवशास्त्रं तदा भूमौ लुप्तं विस्तारयिष्यति ॥" इति ॥ अन्यत्रापि ॥ "कलौ छन्दोगोऽपि श्रुतिशिखरतात्पर्यवचनैर्मम ग्रन्थोद्बन्धैर्जयति मदवादिद्विपहरिः । भिनत्त्येव दीक्षाक्षपितमुखवृत्तिशिवपदे शिवे दभ्रस्थाने भवति च ततोऽन्ते मम गणः ॥" इति च प्रतिपादितं ॥ अस्य च समानकालिकाः कवयः पण्डिताश्च विलिख्यन्ते—(१) **आनन्दरायमखी**—विद्यापरिणयजीवानन्दादिप्रणेताऽस्य मान्यतमो वृद्धः । (२) **बालकविः**— रत्नकेतूदयसुभद्रापरिणयादिप्रबन्धकारो वीरराघवापरनामधेयो मूलाण्डाग्रहाराभिजनः । (३) **सार्वभौमः**—मल्लिकामारुतप्रकरणकर्ता कविरुद्दण्डापरपर्यायः कुक्कुटकोडनगराधीश्वरमानविक्रममहीपालसभालङ्कारभूतः । (अनयोः समागमः—"नाहमधीती वेदे न च पठिती यत्रकुत्रचिच्छास्त्रे । किं तु दरेन्दुवतंसिनि पुरहिसिनि पुंसि भूयसीभक्तिः ॥" इति दीक्षितपद्यञ्च, "बद्धस्पर्धान्यविद्वत्प्रमुखमुखपुटीमुद्रणोनिद्रमेधाशिल्पिन् त्वामप्ययज्वन् कथय कथमिव द्रोग्धुमल्पे प्रगल्भाः । क्रीडाचञ्चच्चपेटाहतकरटिघटाकुम्भकूटाधिरूढप्रौढाटोपा-

य मूढाः किमु मृगपतयो रोहिताद्रोहितारः ॥'' इति पद्यं चोदाहृत्य जातुचिदभवदित्यभियुक्ताः) ।
(४) **रत्नखेटदीक्षितः**—अस्य समवयाः महान् कविः । यस्य किलेदं प्रशंसापद्यमद्यापि श्रूयते ।'
''विपश्चितामपश्चिमे विवादकेलिनिश्चले सपत्नजित्ययत्नमेव रत्नखेटदीक्षिते । बृहस्पतिः क जल्पति प्रसर्पति क सर्पराडमन्मुखश्च षण्मुखश्चतुर्मुखश्च दुर्मुखः ॥'' इति ॥ एतत्कृताः कृतयस्तु नोपलभ्यन्ते ॥ (५) **तातार्यः**—श्रीवैष्णवः चन्द्रगिरिमहीपतिगुरुः अस्य विपक्षः पण्डितः ॥
(६) **खण्डदेवः**—भाट्टकौस्तुभभाट्टदीपिकाभाट्टरहस्यादिकृत् प्रौढमीमांसकः पण्डितराजमीमांसागुरुश्च ॥(७)**जगन्नाथपण्डितराजः**—प्राणाभरणादिप्रबन्धशतप्रणेता ॥(८)**भट्टोजी**—अस्य शिष्यश्च कौमुदीशब्दकौस्तुभप्रौढमनोरमावैयाकरणभूषणतत्वकौस्तुभप्रणेता। न्यूनवयसः (९)**समरपुंगवदीक्षितः**—यात्राप्रबन्धकृत ॥ (१०) **नीलकण्ठदीक्षितः**— नीलकण्ठविजयशिवलीलार्णवशान्तिविलासवैराग्यशतकसभारञ्जनकलिविडम्बनशिवोत्कर्षमञ्जरीमीनाक्षीशतकशिवपुराणतामसत्वनिराकरणादिप्रबन्धकृदस्य शिष्योऽनुजपौत्रश्च ॥ (११) **राजचूडामणिः**— कमलिनीकलहंसानन्दराघवभावनापुरुषोत्तमभैष्मीपरिणयकाव्यदर्पणतन्त्रशिखामणिप्रभृतिप्रबन्धकृत्सत्यमङ्गलरत्नखेटदीक्षितात्मजश्च ॥
(१२) **वेंकटाध्वरी**— उत्तरचम्बुहस्तिगिरिचम्बुविश्वगुणादर्शलक्ष्मीसहस्रप्रद्युम्नानन्दनाटकादिकृत् तातार्यभागिनेयः ॥ (१३) **सदाशिवब्रह्मेन्द्रः**—अद्वैतविद्याविलासबोधार्यात्मानिर्वेदगुरुरत्नमालिकाब्रह्मकीर्तनतरङ्गिण्यादिकर्ता परमहंसश्चेत्यपि सर्वमनवद्यम् ॥

अस्यान्येषामपि मया प्रेक्ष्य ग्रन्थान् प्रयत्नतः ।
निर्णीतोऽप्ययथार्थत्वाम्नो निरस्यैर्निरुध्यताम् ॥

इति सहृदयसमुदायदासः

**भट्टश्रीः बालसरस्वती**
**पण्डितनारायणसुदर्शनः ॥**

# सिद्धान्तलेशसङ्ग्रहः ।

अयमप्ययोमिस्सर्वतन्त्रस्वतन्त्रैस्सुदुस्तरपूर्वोत्तरतन्त्ररूपापारपारावारपारीणैः श्रीमद्दीक्षितसार्वभौमैरेव विरचित इति तत्कृतप्रबन्धजातपरिगणनावसर एव पर्यजीगणाम । अस्य करणे कारणतयाऽप्यूह्यमेतदैतिह्यमामनन्ति वृद्धाः । "अयं किलादौ व्याकृताव्याकृतरूपाभ्यां विद्याऽविद्याभिधानाभ्यां देवताविज्ञानकर्मानुष्ठाननिष्ठाभ्यां समुच्चिताभ्यामेव सिसाधयिषुः सौवर्गमजरामरमनन्तं सुखमीजे बहुभिरध्वरैर्लोकादिब्रह्मजङ्गमम्निमेव । ततश्च शिवशक्तिशार्ङ्गीन्द्रवाय्वादित्यादिषु "नेदं यदिदमुपासत" इत्यादिश्रुतिनिरस्तब्रह्मभावेषु सगुणेषु सरूपेष्वेव कतिषुचन देवताविशेषेषु कलयन्नुपास्यताबुद्धिं कलहायमानश्च कौतस्कुतैर्वैष्णवैरागमिकैश्च शैवैः शिवोत्कर्षपरा: श्रीविष्णूत्कर्षपराश्च तास्ताः कृतीः स्तुतीश्च प्रणयन्नध्यासामास तुण्डीरमण्डलीम् । अथ दिष्ट्यासमागतैरतिचिराध्युषिताविमुक्तक्षेत्रप्रतिनिवृत्तैरधिगतहरिहराभेदबुद्धिनिगमारामसार्वभौमैः परमहंसनृसिंहाश्रमिभिर्बोधिताद्वैतसमयः स्वतातचरणव्याख्यावचोदृढीकृताभेदबुद्धिश्च प्रथममुमेव प्राणैषीत्समनन्तरमपि प्रबन्धमतः परं परिमलमन्तेच न्यायरक्षामणीमिति ॥" सूचितश्चैरमस्मिन्नेतत्कविना ॥ यथा—"प्राचीनैर्व्यवहारसिद्धविषयेष्वात्मैक्यसिद्धौ परं सन्नह्यद्भिरनादरात्सरणयो नानाविधा दर्शिताः । तन्मूलानिह सङ्ग्रहेण कतिचित्सिद्धान्तभेदान् धियः शुद्ध्यै सङ्कलयामि तातचरणव्याख्यावचःख्यापितान् ॥ इति " ॥ अस्मिंश्च बहवः सिद्धान्ताः सिद्धान्तिनां सङ्गृह्य प्रदर्शिताः । अत्र च प्रतिपादिताः प्रबन्धाः प्रबन्धारश्च । अद्वैताचार्यभाष्यञ्च प्रायशः प्रतिपदमादीयते, पर—१, प्रकटार्थकारः— २. विवरणकारः ३. तदेकदेशिनः. ४. संक्षेपशारीरकम्. ५. वार्तिकम्. ६. आचार्यवाचस्पतिमिश्राः, भामतीच. ७. कौमुदीकारः ८. मायाऽविद्याभेदवादिनः. ९. तदेकदेशिनः. १०. तदभेदवादिनः. ११. पदार्थतत्त्वनिर्णयकारः. १२. विवर्तवादिनः, १३. परिणामवादिनः. १४. सिद्धान्तमुक्तावलीकृतः. १५. प्रकटार्थविवरणकाराः. १६. तत्त्वविवेकः. १७. नैष्कर्म्यसिद्धिः. १८. ब्रह्मानन्दः (विद्यारण्यकृतिः १९. दृग्दृश्यविवेकः. २०. कल्पतरुः. २१. भारतीतीर्थः. २२. तत्त्वशुद्धिकाराः. २३. न्यायचन्द्रिकाकाराः. २४. पञ्चदशी. २५. तत्त्वप्रदीपिका. २६. तत्त्वशुद्धिः. २७. कवितार्किकचक्रवर्तिनृसिंहभट्टोपाध्यायाः. २८. पञ्चपादिका. २९. न्यायसुधाकृतः. ३०. विवरणवार्तिकम्. ३१. शास्त्रदीपिका. ३२. न्यायरत्नमाला. ३३. अद्वैतविद्याकृतः. ३४. विवरणोप[illegible]: ३५ [illegible] निर्णयः. ३६. वेदान्तकौमुदी. ३७. शास्त्रदर्पणम्. ३८. [illegible]चार्याः ३९. [illegible] ४०. अद्वैतदीपिका. ४१. आनन्दबोधाचार्याः. ४२. दृ[illegible]वादिनः. [illegible] ॥— अनुक्रमणिकयाचान्ये विशदा इत्यत्रोपरम्यते ॥ न ह्यधुनाऽयमिवाद्वैत[illegible]दर्शनपरः प्रबन्धः । तत्श्चायमतीव वेदान्तिनामुपकारक [illegible] तकृष्णानन्दतीर्थैरयमनूद्याख्यात इत्यभियुक्ताः ॥

## ॥ अच्युतकृष्णानन्दतीर्थाः ॥

इमे च श्रीमत्परमहंसपरिव्राजकाचार्याणां सुप्रसिद्ध[illegible]स्वयंप्रकाशानन्दसरस्वतीनां शिष्यास्तत्प्रशिष्याणां प्राचार्यादपि परम[illegible]भाजां परमहंसस्वयंप्रकाश[illegible]तीर्थानामनुजिघृक्षयाऽस्य सिद्धान्तलेशसङ्ग्रहस्य व्याख्यां श्रीकृष्णालङ्काराख्यां प्राणैषुः । ते च सार्ध[illegible] शतसंवत्सरेभ्यः प्रागध्यवात्सुरखण्डकावेरीतीरमधिनीलकण्ठेश्वरमिति पाश्चात्याः ॥

अस्य च सिद्धान्तलेशसङ्ग्रहस्य मुद्रापणे कृतप्रयत्नैरस्माभिर्मातृकाः षडासादिताः संशीलिताश्च—तासु ॥

(१) **प्रथमा**– एतद्व्याख्यातृशिष्य **श्रीस्वयंप्रकाशानन्दतीर्थ** संगृहीतात् गौरीमायूरपरिसरगतारयपुरस्थापितात् पुस्तकालयादाहृता शुद्धा सुविशदहस्तलेखा सव्याख्या साक्षात्तैरेव लिखिता ३३६ तालपत्रात्मिका ग्रन्थलिपिः समग्रा.

(२) **द्वितीया**— श्रीमदप्पय्यदीक्षितान्ववायसम्भवानां तन्नवमपूरुषाणामधिगतमहामहोपाध्यायबिरुदानामखिलदर्शनपारदृश्वनां श्रीत्यागराजमखिराजानामालयादासादिता सव्याख्या शुद्धा प्रायशस्सुलेखा च साक्षात्प्रथमात इवोद्धृत्य लिखिता समग्रा ग्रन्थलिपिः.

(३) **तृतीया**— कडप्पाडिस्ट्रिक्ट् प्रोथित्तूरग्रामाभिजनानां डी. **वेङ्कटाचलशास्त्रिणां** निकटादानीता सव्याख्या प्रायशश्शुद्धा काकलपत्रात्मिकाऽऽन्ध्रलिपिः समग्रा.

(४) **तुरीया**—सुप्रसिद्धषड्दर्शिनीपारदृश्वनामोरत्तनाड् **वासुदेवशास्त्रिणां** कोशादस्मत्तातपादैः कुम्भघोणाभिजन **श्रीरामस्वामिमखिशिखामणिभि**रुद्धृत्य विलिखिता सव्याख्या सुस्पष्टहस्तलेखा प्रतिकृतिरिव साक्षात्प्रथमायाः— तालपत्रात्मिकापरिच्छेदद्वयवती. ग्रन्थलिपिः.

(५) **पञ्चमी**— चिदम्बरस्थब्रह्मविद्यामुद्राक्षरशालामुद्रितमनतिविशदाङ्कनं मूलमात्रं मुद्रितं ग्रन्थलिप्याम् ॥

(६) **षष्ठी**—महामहोपाध्याय **मानवल्ली गङ्गाधरशास्त्रिणां** परिशीलनया ई. जे. लाजरस् महाशयाध्यक्षितकाशिकीयविद्यासुधानिधिमुद्राक्षरशालायां मुद्रिता सटिप्पणा समग्रा नागरलिप्याम् ॥

N.—B. प्रायशः इमास्सर्वाः अनतिभिदुरपाठा इति व्याख्यानुगतपाठतया प्रथममातृकास्थ एव संशोध्य मुद्रितः ॥ इत्थमियमद्वैतमञ्जरी च इयताकालेन प्राचीकटत समग्रान् पञ्च प्रबन्धान् " अद्वैतसिद्धिः, लघुचन्द्रिका, बिन्दुब्रह्मानन्दीयं, ब्रह्मसूत्रवृत्तिः, सिद्धान्तलेशसंग्रहश्चेति— समग्रयिष्यते चाचिराद्ब्रह्मविद्याभरणमपीह.

अद्वैतप्रथितप्रबन्धकुसुमान्य**द्वैतमञ्जर्य**सावद्वैताध्वविवृद्धये प्रकटयन्त्यम्लानया स्वश्रिया ।
सन्तत्या सुदृशामहंप्रथमिकापूर्वं गृहीतैर्धृतैराधत्तां चिरमर्थ्यगुच्छविसरैरामोदिनीं मेदिनीम् ॥१॥
जिष्णोस्**साम्बशिवा**भिधस्य सुरभेरुद्योगतो द्योतिता **श्रीविद्या**वनमूर्ध्नि साधुविकसन्त्यद्वैतमञ्जर्यसौ।
तद्गुच्छैस्सरसैस्समीरणहृतैस्सर्वत्र सञ्चारितैः पुष्णातु श्रियमुज्ज्वलां प्रथयितुः प्राप्तुश्च मोदं परम् ॥ २ ॥

**मञ्जर्या**ऽ**द्वैतसिद्धि**र्भवति सुमनसां सा **लघुचन्द्रिका**ऽपि
स्पष्टा **बिन्दु**र्यथेष्टं स च रसबहुलं लीढ **आनन्द**युक्त्या ।
सन्माध्वी**लेशसंग्रह**श्च्यपि बुधनिवहस्**सूत्रवृत्त्या** सुगुम्भं
भर्ताशु**ब्रह्मविद्याभरण**मपि शुभं पश्यताग्रे समग्रम् ॥३॥

अद्वैतं भुवि वर्द्धतां विजयतामद्वैतमञ्जर्यसौ तन्नेतापि वपुर्वसुस्थितिगुरुं धत्तां धृतिं शाश्वतीम् ।
श्रीविद्यापि निरन्तरोपचयिनी धत्तां प्रतिष्ठां परामित्यभ्यर्थयते शिवं शिवकरं प्रीत्यैव **नारायणः** ॥४॥

इति सहृदयसमुदायविधेयः

**मट्टश्री बालसरस्वती पण्डित नारायणसुदर्शनः.**



॥ श्रीरस्तु ॥

# सिद्धान्तलेशसंग्रहाख्योऽयं ग्रन्थः ।

॥ सव्याख्यः प्रारभ्यते ॥

——○:(*):○——

वेदवेद्यमुमाकान्तं कुमाराभ्यामलंकृतम् ।
नन्दीशप्रमुखैस्सेव्यं प्रणमामीष्टसिद्धये ॥ १ ॥
शङ्करं शङ्कराचार्यं व्यासं नारायणात्मकम् ।
सरस्वतीं च ब्रह्माणं प्रणमामि पुनःपुनः ॥ २ ॥
गोविन्देति समाक्रन्द्य रक्षां प्राप भयातुरः ।
यं गजः करुणामूर्तिं तं गोविन्दं भजेऽन्वहम् ॥ ३ ॥
आपन्ना यं समाश्रित्य रक्षां प्राप सुदुर्लभाम् ।
कृष्णा कृष्णस्य महिषी तं कृष्णं संश्रयेऽन्वहम् ॥ ४ ॥
प्रकाशितब्रह्मतत्त्वं प्रकृष्टगुणशालिनम् ।
प्रणवस्योपदेष्टारं प्रणमाम्यनिशं गुरुम् ॥ ५ ॥
यो मे विश्वेश्वरक्षेत्रं विश्वेश्वरसमो गुरुः ।
समध्यास्ते स्वयंज्योतिर्वाणीसंज्ञो भजामि तम् ॥ ६ ॥
यस्य शिष्यप्रशिष्याद्यैः व्याप्तेयं साम्प्रतं मही ।
सर्वज्ञस्य गुरोस्तस्य चरणौ संश्रये सदा ॥ ७ ॥
गुरोरपि गरीयान्मे यः कलाभिरलंकृतः ।
अद्वैतानन्दवाण्याख्यस्तं वन्दे शमवारिधिम् ॥ ८ ॥
ओतप्रोतमिदं सर्वं यस्मिन् सच्चित्सुखात्मके ।
पर्यवस्यन्ति वेदान्ता यत्र चाहं तदक्षरम् ॥ ९ ॥
श्रीकृष्णचरणद्वन्द्वं प्रणिपत्य निबन्धनम् ।
व्याकुर्वे शास्त्रसिद्धान्तलेशसङ्ग्रहसंज्ञितम् ॥ १० ॥
आचार्यचरणद्वन्द्वस्मृतिः लेखकरूपिणम् ।
मां कृत्वा कुरुते व्याख्यां नाहमत्र प्रभुर्यतः ॥ ११ ॥

तत्र तावत् 'आत्मावा अरे द्रष्टव्यः श्रोतव्यो मन्तव्य' इत्यधीतसाङ्गस्वाध्यायस्य वेदान्तैरापातप्रतिपन्ने ब्रह्मा-

---

ता भवति । विवक्षितवस्तुप्रतिपत्त्युपायतया विरुद्धनानाप्रकारप्रदर्शनमाचार्याणां न दोषाय भवति । किं त्वलङ्कारायैव भवति । प्रतिपत्तॄणां प्रज्ञावैचित्र्येण कस्यचित्प्रतिपत्तुः केनचित् प्रकारेण मुक्तिसाधनब्रह्मात्मैक्यज्ञानलाभात् । तदुक्तं सुरेश्वराचार्यैः—'यया यया भवेत् पुंसां व्युत्पत्तिः प्रत्यगात्मनि । सा सैव प्रक्रियेह स्यात् साध्वी सा चानवस्थिता ॥' इति । व्युत्पत्तिः बोधः । प्रत्यक् चासावात्मा च प्रत्यगात्मा सर्वान्तरश्चिदात्मा, तस्मिन्विषये । प्रक्रिया प्रकारः । इह वेदान्तशास्त्रे । साध्वी निरवद्या गुणभूता । साचानवस्थिता नानाविधा । परिमले दीक्षितैरप्येतदुक्तम्—'अकल्पितवस्तुप्रतिपत्त्युपायतया कल्प्यमानेषु पदार्थेषु विरोधो न दोषावहः । यथा तात्त्विकारुन्धतीप्रतिपत्त्युपायतया नानापुरुषैः कल्प्यमानासु तत्प्राच्योदीच्यादिनक्षत्ररूपासु स्थूलारुन्धतीषु विरोधो न दोषावह' इति । तन्मूलान् प्राचीनप्रदर्शितनानाविधसरणिमूलान् । इह स्वग्रन्थे । धियः शुध्यै स्वबुद्धिपरिष्काराय । वस्तुतस्तु लोकानुग्रह एव प्रयोजनमिति बोध्यम् । तातचरणानां पितृचरणानां व्याख्यारूपैः वचोभिः ख्यापितान् ज्ञापितान् । अनेन स्वस्य ब्रह्मविद्यामाचार्यादेव लब्धां दर्शयति स्वग्रन्थस्योपादेयत्वासिद्धये । इह सङ्ग्रहेण सिद्धान्तभेदान् सङ्कलयामीत्युक्तमेव विवृण्वन् ननु, प्राचीनग्रन्थसिद्धानामेव स्वग्रन्थे सङ्ग्रह इत्युक्तमयुक्तम् । प्राचीनग्रन्थेष्वविद्यमानस्यापि युक्तिभिरुपपादनस्य स्वकीयसङ्ग्रहग्रन्थे तत्र तत्रोपलम्भादिति शङ्कां निराकरोति—**तेष्विति**।

स्वग्रन्थे प्रथमं श्रवणविधिः विचार्यत इत्याह—**तत्र तावदिति** । श्रवणविधावधिकारिणं निर्दिशति—**अधीतेति** । वेदान्तैः जनितापातप्रतिपत्तिविषये ब्रह्माभिन्नात्मनि सम्यग्दार्ढ्येनोदिता उत्पन्ना जिज्ञासा निर्णयरूपज्ञानेच्छा यस्येत्यर्थः । अधीतवेदस्यापि शिक्षाकल्पव्याकरणादीनां वेदाङ्गानामध्ययनाभावे सति व्युत्पत्तेरभावात् जिज्ञासाहेतुभूतापातप्रतिपत्तिरपि न सम्भवेदित्यभिप्रेत्याधीतसाङ्गस्वाध्यायस्येत्युक्तम् । न च निर्दोषवेदान्तजन्यायाः ब्रह्मात्मप्रतिपत्तेः कथमापातत्वमिति वाच्यम् । नाहं ब्रह्मेतिप्रत्यक्षविरोधादिशङ्कया प्रमारूपायामपि ब्रह्मात्मप्रतिपत्तावप्रामाण्यशङ्कास्पदत्वरूपस्यापातत्वस्य सम्भवादिति भावः । वेदा-

त्मानि समुदितजिज्ञासस्य तज्ज्ञानाय वेदान्तश्रवणे विधिः प्रतीयमानः किंविध इति चिन्त्यते। तिस्रः खलु विधेर्विधाः- अपूर्वविधिः नियमविधिः परिसङ्ख्याविधिश्चेति । तत्र काल- त्रयेऽपि कथमप्यप्राप्तस्य प्राप्तिफलको विधिराद्यः । यथा 'व्रीहीन्प्रोक्षती'ति । नात्र व्रीहीणां प्रोक्षणस्य संस्कारकर्मणो विना विनियोगं मानान्तरेण कथमपि प्राप्तिरस्ति । पक्षप्राप्तस्याप्राप्तांशपरिपूरणफलको विधिर्द्वितीयः । यथा 'व्रीहीनवहन्ती'ति । अत्र विध्यभावेऽपि पुरोडाशप्रकृतिद्रव्याणां व्रीहीणां तण्डुलनिष्पत्त्याक्षेपादेवावहननप्राप्तिर्भविष्यतीति न तत्प्राप्त्यर्थोऽयं विधिः। किंत्वाक्षेपादवहननप्राप्तौ तद्वदेव लोकावगतकारणत्वाविशेषात् नखविदलनादिरपि पक्षे प्राप्नुयादिति

---

न्तश्रवणे श्रोतव्य इति विधिः प्रतीयमान इति सम्बन्धः । **तज्ज्ञानायेति** । अप्रामाण्यशङ्कानास्पदब्रह्मात्मज्ञानायेत्यर्थः । खलुशब्देनापूर्वविधित्वादिप्रकारत्रयस्य पूर्वतन्त्रे प्रसिद्धिः सूच्यते । **कालत्रयेऽपीति** । कथमपि दृष्टार्थत्वेनादृष्टार्थत्वेन वा केनापि प्रकारेण कालत्रयेऽपि कदापि विधिं विना प्राप्तिरहितस्य प्रोक्षणादेः प्राप्तिफलको विधिराद्यः अपूर्वविधिरित्यर्थः । व्रीहीनिति द्वितीयाश्रुत्या व्रीहीणां संस्कार्यत्वावगमात् प्रोक्षणस्य संस्कारकर्मत्वमुक्तमिति मन्तव्यम् । **विनियोगमिति** । विधायकशब्दमित्यर्थः । **पुरोडाशेति** । दर्शपूर्णमासयोराग्नेयादियागानामुत्पत्तौ पुरोडाशद्रव्यं विहितम् । व्रीहयस्तूत्पन्ने यागे यागानुवादेन विहिताः । तथा च व्रीहीणामुत्पन्नशिष्टानामुत्पत्तिशिष्टपुरोडाशावरुद्धे यागे साक्षात्साधनत्वायोगात् पुरोडाशप्रकृतिद्रव्यत्वेन यागसाधनत्वं पर्यवस्यति । पुरोडाशप्रकृतित्वं च व्रीहीणां तण्डुलनिष्पत्तिद्वारकम् । तण्डुलनिष्पत्तिश्च स्वकारणमाक्षिपति । तण्डुलनिष्पत्तौ च कारणमन्वयव्यतिरेकाभ्यामवहननं निश्चितमिति विधिं विना विधित्सितावहननप्राप्तिरस्तीत्यर्थः । नन्ववहननस्य लोकतः प्राप्तौ तस्य लोकत एव नित्यप्राप्तिरपि स्यादित्यत आह—**किंत्वित्यादिना** । **आक्षेपादिति** । तण्डुलनिष्पत्त्याक्षेपादित्यर्थः । किंत्ववहननाप्राप्तांशसद्भावात्तदंशपरिपूरणफल इति सम्बन्धः ।

अवहननाप्राप्तांशस्य सम्भवात् तदंशपरिपूरणफलकः । द्वयोः शेषिणोरेकस्य शेषस्य वा एकस्मिञ्छेषिणि द्वयोः शेषयोर्वा नित्यप्राप्तौ शेष्यन्तरस्य शेषान्तरस्य वा निवृत्तिफलको विधिस्तृतीयः । यथा अग्निचयने 'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते' इति यथा वा चातुर्मास्यान्तर्गतेष्टिविशेषे गृहमेधीये 'आज्यभागौ यजती'ति । अग्निचयने अश्वरशनाग्रहणं गर्दभरशनाग्रहणं चेति द्वयमनुष्ठेयम् । तत्राश्वरशनाग्रहणे 'इमामगृभ्णन्नि'ति मन्त्रो लिङ्गादेव रशनाग्रहणप्रकाशनसामर्थ्यरूपान्नित्यं प्राप्नोतीति न तत्प्राप्त्यर्थः तदप्राप्तांशपरिपूरणार्थो वा विधिः। किं तु लिङ्गाविशेषात् गर्दभरशनाग्रहणेऽपि मन्त्रः प्राप्नुयादिति तन्निवृत्त्यर्थः । तथा गृहमेधीयस्य दर्शपूर्णमासप्रकृतिकत्वादतिदेशादेवाज्यभागौ नित्यं प्राप्नुत इति न तत्र विधिः तत्प्राप्त्यर्थः, तन्नियमार्थो वा । किं त्वतिदेशात् प्रयाजादिकमपि प्राप्नुयादिति तन्निवृत्त्यर्थः । गृहमेधीयाधिकरणपूर्वपक्षरीत्येदमुदाहरणं यत्र क्वचिदुदाहर्तव्यमित्युदाहृतम् । न च नियमविधावपि पक्षप्राप्तावहनन-

---

**द्वयोरिति** । द्वयोः शेषिणोरेकस्य शेषस्य नित्यप्राप्तौ शेष्यन्तरस्य निवृत्तिफलकः एकस्मिन् शेषिणि द्वयोः शेषयोः नित्यप्राप्तौ शेषान्तरस्य निवृत्तिफलको वा विधिस्तृतीय इति योजना । **न तदिति** । प्राप्तत्वान् न तत्प्राप्त्यर्थः, नित्यप्राप्तत्वात् न तदप्राप्तांशपरिपूरणार्थो वेत्यर्थः । **अतिदेशादेवेति** । 'प्रकृतिवद्विकृतिः कर्तव्ये'त्येवंरूपादित्यर्थः । **न तत्र विधिरिति** । 'आज्यभागौ यजती'ति विधिराज्यभागयोः प्राप्त्यर्थो न भवति । विधिं विना प्राप्तत्वात् । तयोरप्राप्तांशपरिपूरणार्थो वा न भवति । नित्यप्राप्तत्वान् । किं तु तन्निवृत्त्यर्थ इति योजना । ननु, 'आज्यभागौ यजती'ति विधेरितराङ्गकलापपरिसङ्ख्यायकत्वं न सिद्धान्त इत्यत आह— **गृहमेधीयाधिकरणेति** । **नियमविधावपीति** । परिसङ्ख्याविधाविव नियमविधाव-

स्याप्राप्तांशपरिपूरणे कृते तदवरुद्धत्वात् पाक्षिकसाधनान्तरस्य नखविदलनादेर्निवृत्तिरपि लभ्यत इतीतरनिवृत्तिफलकत्वाविशेषान्नियमपरिसङ्ख्ययोः फलतो विवेको न युक्त इति शङ्क्यम् । विधितोऽवहननानियमं विना आक्षेपलभ्यस्य नखविदलनादेर्निवर्तयितुमशक्यतया अप्राप्तांशपरिपूरणरूपस्य नियमस्य प्राथम्यात् विधेयावहननगतत्वेन प्रत्यासन्नत्वाच्च तस्यैव नियमविधिफलत्वोपगमात् । तदनुनिष्पादिन्या अविधेयगतत्वेन विप्रकृष्टाया इतरनिवृत्तेः सन्निकृष्टफलसम्भवे फलत्वानौचित्यात् । एवं त्रिविक्तासु तिसृषु विधासु किंविधः श्रवणविधिराश्रीयते ।

प्रकटार्थकारादयः केचिदाहुः—अपूर्वविधिरयम् । अ-

---

पीत्यर्थः । तदवरुद्धत्वादिति । अवहननेनैवावरुद्धत्वात्तण्डुलनिष्पत्त्याक्षेपस्य शान्तत्वादित्यर्थः । फलत इति । नियमविधेः पक्षप्राप्तावहननादिक्रियादिविधायकत्वात् । परिसङ्ख्याविधेश्च नित्यप्राप्तक्रियादिविधायकत्वान्नियमपरिसङ्ख्याविध्योस्स्वरूपतो विवेकलाभेऽपि फलतो भेदो न युक्त इत्यर्थः । नियमस्य नियमविधिफलत्वोपगमे हेतुद्वयमाह—प्राथम्यादित्यादिना । प्रत्यासन्नत्वादिति । विधिं प्रति प्रत्यासन्नत्वादित्यर्थः । विधेयक्रियागतत्वं प्रत्यासन्नत्वे हेतुः । इतरनिवृत्त्यपेक्षया प्रथमोपस्थितत्वरूपे प्राथम्ये हेतुमाह— विधित इत्यादिना अशक्यतयेत्यन्तेन । इतरनिवृत्तेर्नियमविधिफलत्वानुपगमे हेतुद्वयमाह—तदनुनिष्पादिन्या इत्यादिना । अप्राप्तांशपरिपूरणोपस्थित्यनन्तरमुपस्थिताया इत्यर्थः । अनेन विलम्बितोपस्थितिकत्वमेको हेतुरुक्त इति मन्तव्यम् । द्वितीयहेतौ विप्रकृष्टत्वे हेतुमाह—अविधेयेति । व्यावृत्तिर्नामाननुष्ठेयता अनङ्गता वा । सा चाविधेयनखविदलनादिगतेत्यर्थः । इदानीं प्रकृतं श्रवणविधिविचारमारभते—एवमिति । अप्राप्तत्वादिति । ब्रह्मसाक्षात्कारं प्रति वेदान्तश्रवणस्य साधनतया मानान्तरादनधिगतत्वेनाप्राप्तार्थकत्वादित्यर्थः । ननु, मानान्तरादनधिगतत्वमसिद्धम् । अन्वयव्यतिरेकाभ्यान्तदवगतिसम्भवात् । तथा हि—वेदान्तश्रवणे सति ब्रह्मसाक्षात्का-

प्राप्तत्वात् । न हि वेदान्तश्रवणं ब्रह्मसाक्षात्कारहेतुरिति अन्वयव्यतिरेकप्रमाणमस्ति । लोके कृतश्रवणस्यापि बहुश-स्तदनुत्पत्तेःअकृतश्रवणस्यापि गर्भगतस्य वामदेवस्य त-दुत्पत्तेरुभयतो व्यभिचारात् । न वा श्रवणमात्रं श्रोतव्यार्थ-साक्षात्कारहेतुरिति शास्त्रान्तरश्रवणे गृहीतः सामान्यनिय-मोऽस्ति । येनात्र विशिष्य हेतुत्वग्राहकाभावेऽपि सामान्यमु-खेनैव हेतुत्वं प्राप्यत इत्याशङ्क्येत । गान्धर्वादिशास्त्रश्रवण-स्य षड्जादिसाक्षात्कारहेतुत्वाभ्युपगमेऽपि कर्मकाण्डादिश्र-वणात् तदर्थधर्मादिसाक्षात्कारादर्शनेन व्यभिचारात् । त-स्मादपूर्वविधिरेवायम् । भाष्येऽपि ‘सहकार्यन्तरविधिः

---

रो दृश्यते । असति च तस्मिन्नदृश्यत इति तत्राह—**न हीति** । **तदनुत्पत्तेरिति** । साक्षात्कारानुत्पत्तेरित्यर्थः । **वामदेवस्येति** । तथा च श्रुतिः ‘गर्भ एवैतच्छयानो वामदेव एवमुवाचे'ति । एवं पूर्वोक्तप्रकारेण एतद्ब्रह्मज्ञानजन्मना स्वकीयां शक्ति-मुवाचेत्यर्थः । ननु, गान्धर्वशास्त्रश्रवणे षड्जादिस्वरसाक्षात्कारः, तदभावे तदभाव इति दृष्टम् । तत्र श्रोतव्यार्थविशेषस्वरसाक्षात्कारं प्रति गान्धर्वशास्त्रविचारात्मक-स्य श्रवणविशेषस्य कारणत्वग्रहकाले लाघवात् श्रोतव्यार्थसाक्षात्कारत्वावच्छिन्नं प्रति श्रवणमात्रस्य कारणत्वं गृह्यते । तथा च ब्रह्मसाक्षात्कारवेदान्तश्रवणयो-र्विशिष्य कार्यकारणभावग्रहणाभावेऽपि ब्रह्मसाक्षात्कारस्यापि श्रोतव्यार्थसाक्षात्कार-त्वात् वेदान्तश्रवणस्यापि श्रवणत्वादुक्तसामान्यरूपेण वेदान्तश्रवणस्य ब्रह्मसाक्षा त्कारहेतुत्वं प्राप्तमेवेति नापूर्वविधिरिति नेत्याह—**न वा श्रवणमात्रमिति** । धर्मश्रवणस्थले अदृष्टरूपस्यालौकिकश्रेयस्साधनताविशिष्टयागादिरूपस्य वा धर्म-स्य साक्षात्कारायोग्यतया साक्षात्कारादर्शनेन उक्तसामान्यकार्यकारणभावस्य व्यभिचारात् न लाघवावतार इति तत्र गान्धर्वशास्त्रश्रवणस्यान्वयादिना स्वरसाक्षा-त्कारहेतुत्वग्रहेऽपि वेदान्तश्रवणस्य न ब्रह्मसाक्षात्कारहेतुत्वप्राप्तिरित्याह—**गा-न्धर्वादीति । कर्मेति** । अत्रादिपदेन हिरण्यगर्भादिदेवताप्रतिपादकवाक्यजातं गृ-ह्यते । धर्मादीत्यादिपदेन हिरण्यगर्भादिदेवता गृह्यते । **तस्मादिति** । प्राप्त्य-भावादित्यर्थः । अत्रार्थे सम्मतिमाह—**भाष्येऽपीति** । भाष्येऽप्यपूर्वविधिरेवाङ्गी-

**पक्षेण तृतीयं तद्वतो विध्यादिवदि'त्यधिकरणे विद्यासहका-**

---

कृत इति सम्बन्धः । अयमर्थः बृहदारण्यके श्रूयते—'तस्मात् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरि'ति । यस्माद्-तिक्रान्ता ब्राह्मणाः श्रवणादिसाधनैरात्मानं विदित्वा जीवन्मुक्तिव्यञ्जकसकलवि-क्षेपरहितं परमहंसाश्रमं प्राप्ताः, तस्मादिदानीन्तनोऽपि ब्राह्मणो ब्रह्मसाक्षात्का-रार्थी पाण्डित्यं निर्विद्य बाल्येन स्थातुमिच्छेत् । विचारप्रयोजकापातरूपा बु-द्धिरविद्यानिवृत्त्यादिकार्याक्षमत्वात् पण्डा सास्य सञ्जातेति पण्डितः, तस्य कृत्यं पाण्डित्यं श्रवणमित्यर्थः । बाल्यं नाम बालस्य शिशोः कृत्यं दम्भदर्पादिरा-हित्यम् । न तु बाले प्रसिद्धयथेष्टचेष्टारूपम् । तस्य बहिर्मुखत्वापादकत्वेन विद्या-विरोधित्वात् । दम्भादिराहित्यरूपभावशुद्धिवाचकेन बाल्यपदेन भावशुद्धिसाध्यं मननं लक्ष्यते । श्रवणानन्तरभावित्वात्तस्य । बाल्यं च पाण्डित्यं च निर्विद्य निश्च-येन लब्ध्वा तदुभयं सम्यगनुष्ठायेति यावत् । अथ अनन्तरं मुनिस्स्यान्मननशी-लो भवेदिति विधिः । ध्यानमत्र मननम् । ध्याननिष्ठे व्यासादौ मुनिशब्दप्रयोग-दर्शनात् ध्यानं विना विचारमात्रविश्रान्ते तदप्रयोगाच्च । तथा चापूर्वत्वाद्यथा श्र-वणे विधिः, एवं मौनस्य विद्यासहकारिणः विद्योत्पत्तौ साधनस्य विधिरेवाश्रयि-तव्यः । अपूर्वत्वादेवेति भाष्यार्थः । सूत्रार्थस्तु तद्वतः श्रवणमननजनिततत्त्वनि-र्णयरूपविद्यावतस्तत्त्वसाक्षात्कारार्थिनः सन्न्यासिनः पाण्डित्यबाल्यापेक्षया तृतीयं मौनं 'अथ मुनिरि'ति वाक्येन विधीयते । ननु, पाण्डित्यबाल्याभ्यां निर्णीततत्त्वस्तत्त्व-साक्षात्कारार्थी ध्याने स्वयमेव प्रवर्तते रत्नतत्त्वसाक्षात्कारार्थीव रत्नतत्त्वगोच-रप्रत्ययसन्ततौ । न च तत्त्वसाक्षात्कारार्थिनस्तत्साधनश्रवणादावपि स्वयमेव प्रवृ-त्तिस्स्यादिति तत्रापि विधिवैयर्थ्यशङ्का तुल्येति वाच्यम् । विधिं विना वेदान्त-श्रवणे प्रवृत्त्यसम्भवस्य साधितत्वात् । तथा च मौनविधिः व्यर्थ इत्यत्राह—**पक्षेणेति** । मौनस्य सहकार्यन्तरस्य विधिरङ्गीकर्तव्यः । पक्षेणाप्राप्तिसत्त्वात् । सा-क्षात्कारार्थं ध्याने स्वयमेव प्रवृत्तस्यापि विषयदर्शनप्राबल्यात् ध्यानस्य कदा-चिदप्राप्तिस्सम्भवति । तथा च मौनविधेरपूर्वविधित्वाभावेऽपि नियमविधित्वं सि-ध्यत्येव । सति च नियमविधौ तदतिक्रमे नियमादृष्टालाभेन साक्षात्कारानुदयभी-त्या स्वभावप्राप्तमपि विषयदर्शनं यत्नेन निवार्य ध्यान एव प्रवर्तेत इति पक्षेणेति सूत्रभागाभिप्रायः । ननु, ब्रह्मविद्याप्रधाने प्रकरणे कथं ध्यानादिविधिः । वा-क्यभेदप्रसङ्गादिति, नेत्याह—**विध्यादिवदिति** । अङ्गविधिवदित्यर्थः । यथा प-

रिणो मौनस्य बाल्यपाण्डित्यवद्विधिरेवाश्रयितव्यः । अपूर्वत्वादिति पाण्डित्यशब्दशब्दिते श्रवणे अपूर्वविधिरेवाङ्गीक्रियत ' इति । वेदान्तश्रवणस्य नित्यापरोक्षब्रह्मसाक्षात्कारहेतुत्वं नाप्राप्तम् । अपरोक्षवस्तुविषयप्रमाणत्वावच्छेदेन साक्षात्कारहेतुत्वस्य प्राप्तेः शाब्दापरोक्षवादे व्यवस्थापनात् । तदर्थमे-

---

धानविधिपरे प्रकरणे अवान्तरवाक्यभेदेन प्रयाजाद्यङ्गविधिः, तथा ब्रह्मविद्याङ्गसाधनध्यानादिविधिरित्यर्थः । उक्तरीत्या मौनविधेर्नियमविधित्वे स्थिते भाष्यगतापूर्वत्ववचनं मौनविध्यंशे पाक्षिकाप्राप्त्यभिप्रायं द्रष्टव्यम् । यथासूत्रं पक्षे प्राप्त्यभावादित्येव वक्तव्ये भाष्ये अपूर्वत्वादिति वचनं श्रवणविधिरपूर्वविधिरेवेति ज्ञापनार्थम् । अप्राप्तिमात्रे च दृष्टान्तदार्ष्टान्तिकभावो विवक्षित इति प्रकटार्थकारादीनामाशयः । अपूर्वविधित्वपक्षं दूषयति—**वेदान्तश्रवणस्येति** । विचारविशिष्टवेदान्तरूपस्य श्रवणस्य ब्रह्मसाक्षात्कारहेतुत्वं विधिं विनापि प्राप्तमित्यर्थः । ननु, वाक्यस्य कथं साक्षात्कारहेतुत्वम् । इन्द्रियजन्यज्ञानस्यैव साक्षात्कारत्वात् । अत आह—**अपरोक्षवस्त्विति** । अपरोक्षवस्तुविषयकत्वं ज्ञानस्यापरोक्षत्वम् , न त्विन्द्रियजन्यत्वम् । वस्त्वापरोक्ष्यं च वस्तुव्यवहारानुकूलचैतन्याभिन्नत्वमिति शाब्दापरोक्षवादे वक्ष्यते । तथा च नित्यापरोक्षत्वेन श्रुतिसिद्धब्रह्मरूपवस्तुविषयकत्वाद्वेदान्तजन्यज्ञानस्य साक्षात्कारत्वसिद्धिरित्यर्थः । नन्वस्मिन् शास्त्रे शाब्दापरोक्षवादस्य का सङ्गतिरत आह—**तदर्थमेव हीति** । वेदान्तानां ब्रह्मापरोक्षप्रमितिजनकत्वसिद्ध्यर्थमेव तद्वादसङ्गतिः , नान्यार्थमित्येतत् प्रसिद्धमित्यर्थः । नन्वपरोक्षवस्तुविषयकं प्रमाणं स्वविषये साक्षात्कारहेतुरिति शाब्दापरोक्षवादे प्रसाधनेन वेदान्तानामपि स्वविषये नित्यापरोक्षे ब्रह्मणि अपरोक्षज्ञानसामान्यहेतुत्वमेव प्राप्तम्, न तु सत्तानिश्चयरूपतत्साक्षात्कारहेतुत्वम् । तच्च विचारविशिष्टवेदान्तरूपश्रवणस्यैव युक्तम् । अन्यथा विचारात् प्रागपि सत्तानिश्चयप्रसङ्गात् । न च वाक्यजन्यसाक्षात्कारमात्रादेवाविद्यानिवृत्तिलक्षणफलसम्भवात् सत्तानिश्चयरूपत्वं साक्षात्कारस्य नान्वेषणीयमिति वाच्यम् । तत्रतत्र ब्रह्मोपदेशप्रदेशेषु यावत्संशयनिवृत्ति पुनःपुनः प्रश्नप्रतिवचनलिङ्गेन 'वेदान्तविज्ञानसुनिश्चितार्थाः' इत्यादि श्रुत्या श्रुतब्रह्मणोऽपि यथापूर्वं संसारानुवृत्त्यनुमिताविद्यानिवृत्त्यभावरूपालिङ्गेन च श्रवणमननध्यानशमदमभक्तिवैराग्या-

व हि तत्प्रस्तावः । न च तावता ब्रह्मप्रमाणत्वेनापातदर्शन-साधारणब्रह्मसाक्षात्कारहेतुत्वप्राप्तावप्यविद्यानिवृत्त्यर्थमिष्यमाणसत्तानिश्चयरूपतत्साक्षात्कारहेतुत्वं श्रवणस्य न प्राप्तमिति वाच्यम् । विचारमात्रस्य विचार्यनिर्णयहेतुत्वस्य ब्रह्मप्रमाणस्य तत्साक्षात्कारहेतुत्वस्य च प्राप्तौ विचारितवेदान्तशब्दज्ञानरूपस्य श्रवणस्य तद्धेतुत्वप्राप्तेः । न चोक्तोभयतो व्यभिचारः । सहकारिवैकल्येनान्वयव्यभिचारस्यादोषत्वात् जातिस्मरणस्य जन्मान्तरश्रवणात् फलसम्भवेन व्यतिरेकव्यभिचाराभावात् । अन्यथा व्यभिचारेणैव हेतुत्वबाधे श्रुत्या-

---

दीनां ज्ञानपरिपाकहेतूनां विविदिषालिङ्गेन च सत्तानिश्चयरूपब्रह्मसाक्षात्कारस्यैवाविद्यानिवृत्त्यर्थमिष्यमाणत्वात् । तथा च वेदान्तश्रवणस्योक्तरूपसाक्षात्कारहेतुत्वमप्राप्तमेवेति शङ्कते—**न च तावतेति** । वेदान्तानामिति शेषः । अपरोक्षवस्तुविषयकं प्रमाणं स्वविषये साक्षात्कारहेतुरिति प्रसाधनमात्रेणेत्यर्थः । अपरोक्षवस्तुविषयकं प्रमाणमपरोक्षज्ञानहेतुरिति स्थिते विचारो विचार्यनिर्णयहेतुरिति च स्थिते कार्यकारणभावद्वयमेलनेन प्रकृते विचारविशिष्टवेदान्तज्ञानरूपं श्रवणं सत्तानिश्चयरूपब्रह्मसाक्षात्कारहेतुरिति सिध्यतीत्याह—**विचारमात्रस्येति** । **सहकारीति** । चित्तैकाग्र्यादिरूपसहकारिवैकल्येनेत्यर्थः । उक्तकार्यकारणभावद्वयरूपप्रमाणबलेन श्रवणस्य ब्रह्मसाक्षात्कारहेतुत्वे सिद्धे वामदेवस्य जन्मान्तरीयं श्रवणादिकं कल्प्यते । यथा जातमात्रे जन्तौ दृश्यमानभोगस्य कारणतया प्राग्भवीयं कर्म कल्प्यते, तद्वत् । अतो न व्यतिरेकव्यभिचार इत्याह—**जातिस्मरणस्येति** । पूर्वजातिं स्मरतो वामदेवस्येत्यर्थः । **अन्यथेति** । उक्तरीत्या द्विविधव्यभिचारपरिहारानुपगम इत्यर्थः । व्यभिचारनिश्चयेन हेतुत्वाभावरूपबाधनिश्चयात् श्रवणविधेरबोधकतापत्त्या तदाप्यपूर्वविधिर्न स्यादित्यर्थः । ब्रह्मसाक्षात्कारे श्रवणमिव तपोविशेषादिकमुत्कृष्टजन्मप्राप्तिरूपं वा कारणान्तरमस्तीति शङ्काकाले वामदेवस्य कारणान्तरात् ज्ञानमुत्पन्नमिति शङ्कासम्भवेन श्रवणस्य वामदेवे व्यतिरेकव्यभिचारज्ञानं श्रवणस्य साक्षात्कारहेतुत्वग्रहप्रतिबन्धकं न भवति । न चैकस्य पदार्थस्य ज्ञाने परस्परनिरपेक्षकारणद्वयासम्भवेन

पि तत्साधनताज्ञानासम्भवात् । घटसाक्षात्कारे चक्षुरतिरेकेण त्वगिन्द्रियमिव ब्रह्मसाक्षात्कारे श्रवणातिरेकेण उपायान्तरमस्तीति शङ्कायां व्यतिरेकव्यभिचारस्याप्यदोषत्वात् । तथा च प्राप्तत्वान्नापूर्वविधिः । अत एव 'आवृत्तिरसकृदुपदेशादि'त्यधिकरणभाष्ये दर्शनपर्यवसानानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्ति । यथावघातादीनि तण्डुलनिष्पत्तिपर्यवसानानीति श्रवणस्य ब्रह्मदर्शनार्थस्य दृष्टार्थतया दा-

---

ब्रह्मसाक्षात्कारे कारणान्तरसत्त्वशङ्कैव न जायत इति वाच्यम् । लोके तथाऽदृष्टत्वादित्याह——घटेति । वेदान्तश्रवणस्य ब्रह्मसाक्षात्कारहेतुत्वे विधिं विनैव प्राप्ते फलितमाह— तथा चेति । श्रवणादिविधेः नियमविधित्वे सत्यावृत्त्यधिकरणं सङ्गच्छत इत्याह—अत एवेति । अपूर्वविधित्वाभावादेवेत्यर्थः । अत एवावृत्त्युपदेश इति सम्बन्धः । 'दर्शनपर्यवसानानीत्यारभ्य तण्डुलनिष्पत्त्यवसानानी'त्यन्तस्य भाष्यस्येयं योजना—दृष्टार्थानि श्रवणादीन्यावर्त्यमानानि सन्ति दर्शनपर्यवसानानि भवन्ति । यथावघातादीन्यावर्त्यमानानि तण्डुलनिष्पत्त्यवसानानि भवन्तीति । दृष्टार्थानीत्यत्र दृष्टं फलमात्मदर्शनमेव । अयं भावः—'आत्मा वा अरे द्रष्टव्यश्श्रोतव्य' इत्यादिना आत्मदर्शनोद्देशेन श्रवणादीनि विधीयन्ते । तत्र किमेतानि सकृदनुष्ठेयानि, किं वा यावदात्मदर्शनमावर्त्यानीति संशये सकृदेवानुष्ठेयानि । तावता विधेश्चारितार्थ्यात् । यथा अग्निचयने 'सर्वौषधस्य पूरयित्वावहन्ती'ति वाक्यविहितं सर्वौषधीनामवहननमुपधेयोलूखलसंस्काररूपं सकृदेवानुष्ठीयते, तद्वत् । तथा च सकृदनुष्ठितश्रवणादिजन्यमदृष्टं जन्मान्तरे ब्रह्मदर्शनहेतुरित्यपूर्वविधित्वं श्रवणादिविधीनामिति प्राप्ते, सिद्धान्तः—श्रवणाद्यावृत्तिः कर्तव्या । कुतः असकृदुपदेशात् । तथा हि—भृगुवल्ल्यां भृगुं प्रति पिता असकृत् 'तपसा ब्रह्म विजिज्ञासस्वे'त्युपदिशति । तप आलोचनं ब्रह्मविचारः । तथा छान्दोग्यषष्ठाध्याये श्वेतकेतुं पुत्रं प्रति पिता विचारपूर्वकमसकृत् 'तत्त्वमसी'त्युपदिशति । किं च श्रवणादिभिरात्मदर्शनफले जननीये श्रवणाद्यावृत्तिरूपदृष्टद्वारसम्भवे अदृष्टद्वारकल्पनायोगात्त्वंपदार्थयोश्श्रवणाद्यावृत्तिं विना दुर्बोधत्वाच्च तण्डुलनिष्पत्तिफलकावघातवदावृत्तिरेव । न त्वग्निचयनान्तर्गतावघातवदनावृत्तिः । त-

